वैश्वदेवस्तृचः ओमासश्चर्षणी, सारस्वतस्तृचः पावका नः। ११।१।२-११. ११।२।४-१० । सप्त देवताः शंसति ११।३।१। याज्या विधिभि: सोम्यं मधु । ११।४।१२। वषट्कारानुवषट्कारौ । ११।५।१ ६। प्रउगेण आज्यमनु शंसति होता ।११।५।१.

प्रउग शस्त्र छन्दोमप्रथमेऽहनि त्रैष्टुभम् । आ वायो भूष, प्र याभिर्यासि, आ नो नियुद्भिः इति प्रथमस्तृचः। प्र सोता जीरो, ये वायव इन्द्र, या वा शत नियुतो इति द्वितीयस्तृचः । प्रयद्वा मित्रावरुणा इति तृतीयः। आ गोमता नासत्या इति चतुर्थ. । आ नो देव शवसा इति पञ्चमः । प्र वो यशेषु देवयन्तो इति षष्ठ.। प्र क्षोदसा धायसा इति सप्तमस्तृच.।२३।१।११.।

प्रउगं शस्त्र छन्दोमद्वितीयेऽहनि त्रैष्टुभम् । कुविदङ्ग नमसा, पीवो अन्नाँरयि, उच्छन्नुषस. इति तृच प्रथमः । उशन्ता दूता इत्येषा, यावत्तरस्तन्वो इति द्वे इति द्वितीयस्तृचः। प्रति वा सूर उदिते इति तृतीयः। धेनुः प्रत्नस्य काम्य इति चतुर्थः। महान्त इन्द्रोप इति पञ्चमः। ऊर्ध्वो अग्निः सुमतिं इति षष्ठः। उत स्या नः सरस्वती इति सप्तमस्तृच । २३।१।८-९.

प्रउग शस्त्र छन्दोमतृतीयेऽहनि । प्रवीरया शुचयो दद्रिरे वे (संहितायां 'वा' इति पद, अत्र तु 'वे' इति पद) इति प्रथमस्तृच·। ते सत्येन मनसा इति द्वितीयः। दिवि क्षयता रजस. इति तृतीयः।आ विश्वगाराऽश्विना इति चतुर्थः। अयं सोम इन्द्र तुभ्यं इति पञ्चम.। प्र ब्रह्माणो अङ्गिरसो इति षष्ठ. । सरस्वतीं देवयन्तो, आनो दिवो वृहता, सरस्वत्यभि नो इति सप्तमतृचः। २४।१।१.

प्रउग शस्त्र पृष्ठ्ये षडहे प्रथमेऽहनि । वायवा याहि दर्शत इत्यग्निष्टोमवत् । २०।१।६ । द्वितीयेऽहनि वायो ये ते सहस्रिणः इति ।२०।३।५। तृतीयेऽहनि औष्णिह वायवा याहि वीतये इत्येका, वायो याहि शिवा इति द्वे इति प्रथमस्तृचः । इन्द्रश्च वायवेषा इति द्वे, तत अन्यतरा दिविस्पृशा इति द्वितीयस्तृच.। आ मित्रे वरुणे वयं इति तृतीयः। अश्विनावेह गच्छत इति चतुर्थ.। आ याह्यद्रिभिः सुत इति पञ्चम. । सजूर्विश्वेभिर्देवेभिः इति षष्ठ । उत नः प्रियाः प्रियासु इति सप्तमस्तृचः । २१।१।१२.

प्रउग शस्त्र चतुर्थेऽहनि । वायो शुक्रो, विहि होत्रा, वायो शतं हरीणां इति तृचः प्रथमः । इन्द्रश्च वायवेषा इति द्वितीयः । आ चिकितान सुक्रतू इति तृतीयः। आ नो विश्वाभिरूतिभिः इति चतुर्थः । त्यमुवो अप्रहण, इति पञ्चमः । अपत्य वृजिनं रिपुं इति षष्ठः । अम्बितमे नदीतमे इति सप्तमस्तृच । इदमानुष्टुभम् । २१। ४।१०.

प्रउगं शस्त्र पञ्चमेऽहनि । आ नो यज्ञं दिविस्पृशं, इति द्वे, आ नो वायो महे इत्येका इति प्रथमस्तृचः। रथेन पृथु पाजसा इति द्वितीयः । बह्वः सूरचक्षसः इति तृतीय. । इमा उ वां दिविष्टयः इति चतुर्थः। पिबा सुतस्य रसिन. इति पञ्चमः । देवंदेवं वो इति षष्ठः । बृहदु गायिषे इति सप्तमस्तृचः । इद बार्हतम् । २२।१।७.

प्रउग शस्त्र षष्ठेऽहनि पारुच्छेपं अतिच्छन्दाः सप्तपदम् । स्तीर्णं बर्हिरुप नो इति प्रथमस्तृचः। आवां रथो नियुत्वान् इति द्वितीयः । सु षु मा यातमद्रिभिः इति तृतीयः । युवां स्तोमेभिर्देवयन्तो इति चतुर्थ. । अवर्महं इन्द्र इति द्वे, वृषन्निन्द्र. इत्येका इति पञ्चम. । अस्तु श्रौषट्, ओ षु णो अग्ने, ये देवासो, दिव्येकादश इति षष्ठ. । इयमददाद्रभसमृण इति सप्तमः। २२।७।५.

प्रउग शस्त्रे महाव्रते औष्णिह आनुष्टुभं बार्हतं पाङ्क्त त्रैष्टुभं जागत वा कुर्यात् इति पक्षाः । गायत्रमेवेति सिद्धान्तः। ऐआ. १।३।२-३.

प्रउग शस्त्र विश्वजिति महाव्रते च प्राकृतमेव वायवायाहि दर्शत इति । ऐआ ५।१।४.

प्रउग शस्त्र वैश्वदेवग्रहणादूर्ध्वं शस्यते । ऐआ. ५।१।४ सायण।

प्रउगशस्त्रयाज्यान्ते वषट्कारः ।१२।५।१.

प्रउगशस्त्रे विकारेण याज्याः प्रयोगा. । अनिरुक्तकाः मन्त्रोः ।११।३।३-९। इष्टजनको यजमानस्य । ११।३।१०.

प्रगाथः अच्छावाकशस्त्रे अग्निष्टोमे माध्यंदिने उदिन्न्वस्य रिच्यते इति । प्रयोगे ।

प्रगाथः अत्र प्रग्रथनं क्रियते । यथा प्रनूनं इति बृहती । तत्र चतुर्षु पादेषु अक्षराणि क्रमेण ।८।८।१२।८ इति । तमिद् वोचेम इति सतोबृहती । तत्र चतुर्षु पादेषु अक्षराणि क्रमेण ।१२।८।१२।८ इति । अनयोः प्रग्रथनेन तिस्रो बृहत्यो निष्पादनीयाः । तत्र प्रनूनं इति बृहती यथाश्रुतैव । तत्रत्यः अन्तिमः अष्टाक्षरः पादः द्विः पठनीयः इति एकोऽर्धर्चः संपन्नः । अथ तमिदं वोचेम इत्यस्याः प्रथमद्वितीयपादाभ्यां अर्धर्चः इति मिलित्वा द्वितीया बृहती । अथ तमिद्वोचेम इत्यस्याः द्वितीयं पादं द्विरावर्त्य एकोऽर्धर्चः, उत्तरोऽर्धस्तु यथाश्रुत एवेति मिलित्वा तृतीया बृहती इति । १२.६।३ सायणः ।

प्रगाथः अनुचरः अग्निष्टोमे माध्यंदिने अच्छावाकशस्त्रे तरणिरित् सिषा, आग्निमारुतशस्त्रे देवो वो द्रविणोदाः । प्रयोगे ।

प्रगाथः अनुचरः अग्निष्टोमे माध्यंदिने निष्केवल्ये शस्त्रे अभि त्वा पूर्व । प्रयोगे । माध्यंदिने ब्राह्मणाच्छंसिशस्त्रे मरुत्वतीये शस्त्रे च तत्वा यामि सुवीर्यम् । प्रयोगे ।

प्रगाथः अनुचरः निष्केवल्यशस्त्रे छन्दोमप्रथमेऽहनि त्वं ह्येहि चेरवे ।२३।१।२०–२५। छन्दोमद्वितीये 'अभित्वापूर्व' ।२३।३।२१। छन्दोमतृतीये 'त्व ह्येहि चेरवे' ।२४।१।२१। षडहे प्रथमेऽहनि 'अभि त्वा पूर्व' ।२०।१।१३। द्वितीयेऽहनि 'त्वं ह्येहि चेरवे'। २०।३।११। तृतीयेऽहनि 'यदिन्द्र यावतस्त्वम्'। २१।१।१८.

प्रगाथः इन्द्रनिहवः 'इन्द्र नेदीय एदिहि' इति मरुत्वतीये शस्त्रे, छन्दोमेषु त्रिष्वपि, पृष्ठ्ये षडहे च सर्वेषु अहःसु । २०–२४.

प्रगाथः निष्केवल्ये शस्त्रे अग्निष्टोमे 'पिबा सुतस्य'। स्तोत्रियः 'अभि त्वा शूर' मध्यमया वाचा १२।१२।१–२। अनुरूपः 'अभि त्वा पूर्व' उच्चैस्तरामिव ३–४। धाय्योत्तरं 'पिबा सुतस्य' स्वरवत्या वाचा । ८–९

प्रगाथः निष्केवल्ये शस्त्रे छन्दोमद्वितीयेऽहनि बृहतो योनिः 'त्वामिद्धि हवामहे' २३।३।२३। छन्दोमतृतीयेऽहनि रथंतरस्य योनिः 'अभि त्वा शूर' २४।१।२२.

प्रगाथः निष्केवल्ये शस्त्रे पृष्ठ्ये षडहे तृतीयेऽहनि अभि त्वा शूर २१।१।२०। चतुर्थेऽहनि त्वामिद्धि हवामहे २१।४।२१। पञ्चमेऽहनि अभि त्वा शूर २२।२।७। षष्ठेऽहनि त्वामिद्धि हवामहे २२।७।१६.

प्रगाथः प्रतिपत् अग्निष्टोमे अच्छावाकशस्त्रे माध्यंदिने तरोभिर्वो । आग्निमारुते शस्त्रे 'यज्ञायज्ञा वो'। निष्केवल्ये शस्त्रे अभि त्वा शूर । ब्राह्मणाच्छंसिशस्त्रे माध्यंदिने 'तं वो दस्ममृती । मरुत्वतीये शस्त्रे 'आत्वारथम्' । छन्दोमे प्रथमे तृतीये च त्वामिद्धि हवामहे । द्वितीये अभि त्वा शूर । पृष्ठ्ये षडहे प्रथमेऽहनि अभि त्वा शूर । द्वितीयेऽहनि त्वामिद्धि हवामहे । तृतीयेऽहनि 'यद् द्याव इन्द्र ते' २०–२१.

प्रगाथः बार्हतकाकुभादिः कण्वद्वयात्मकः, आनुष्टुभस्तु तृचः । शस्त्रावयवविशेषः ।१२।१२।७.

प्रगाथः ब्राह्मणस्पत्यः मरुत्वतीये शस्त्रे अग्निष्टोमे होतुः 'प्र नूनं ब्रह्मणस्पतिः' । प्रयोगे.

प्रगाथः ब्राह्मणस्पत्यः मरुत्वतीये शस्त्रे छान्दोमप्रथमेऽहनि 'प्रैतु ब्रह्मणस्पतिः' २३।१।१२। द्वितीयेऽहनि 'उत्तिष्ठ ब्रह्मणस्पते' २३।३।१०। तृतीयेऽहनि-'प्र नूनं ब्रह्मणस्पतिः' ।२४।१।११.

प्रगाथः ब्राह्मणस्पत्यः मरुत्वतीये शस्त्रे पृष्ठ्ये षडहे । प्रथमे चतुर्थे चाहनि प्रैतु ब्रह्मणस्पतिः । द्वितीये पञ्चमे च उत्तिष्ठ ब्रह्मणस्पते । तृतीये षष्ठे च प्र नूनं ब्रह्मणस्पतिः ।२०।२२.

प्रगाथः ब्राह्मणाच्छंसिशस्त्रे अग्निष्टोमे माध्यंदिने 'उदु त्ये मधु' प्रयोगे.

प्रगाथः मरुत्वतीयः मरुत्वतीये शस्त्रे अग्निष्टोमे छन्दोमप्रथमेऽहनि च, प्र व इन्द्राय २३ । १ । १२ द्वितीयेऽहनि बृहदिन्द्राय २३।३।१०। तृतीयेऽहनि नकिः सुदासो २४।१।११ । पृष्ठ्ये षडहे प्रथमे चतुर्थे चाहनि

प्र व इन्द्राय बृहते । द्वितीये पञ्चमे च बृहदिन्द्राय गायत । तृतीये षष्ठे च 'नकिः सुदासो रथं' २०।२२०

प्रगाथः मैत्रावरुणशस्त्रे अग्निष्टोमे माध्यंदिने कस्तमिन्द्र त्वा वसु । प्रयोगे.

प्रगाथः-सामप्रगाथः। निष्केवल्ये शस्त्रे छन्दोमप्रथमेऽहनि पिबा सुतस्य ।२३।१।२८ । द्वितीये उभयं शृणवच्च । २३।१।२४ तृतीये इन्द्र त्रिधातु । २४।१।२२ । पृष्ठ्ये षडहे प्रथमेऽहनि ' पिबा सुतस्य ' ।२०।१।१५। द्वितीये उभयं शृणवच्च १०।३।१२ । तृतीये इन्द्र त्रिधातु २१।१।२१। चतुर्थे ' त्वमिन्द्र प्रतूर्तिषु' २१।४।२२। पञ्चमे ' नो पु त्वा वाघतः' २२।२।८। षष्ठे ' इन्द्रमिद्देवतातये ' २२।७।१८.

प्रगाथाः नाम मण्डलर्षयः प्रागदृश्या उपास्याः। ऐआ. ११९।१–६, ११०।१–५.

प्रजापतेस्तनवः नाम मन्त्राः अवग्रहपठनोत्तरं द्वादशाहस्य दशमेऽहनि मानसग्रहे । ' अनादा चान्नपतिश्च, भद्रा च कल्याणी च, अनिलया चापभया च, अनाप्ता चानाप्या च, अपृष्या चाप्रतिपृष्या च, अपूर्वा चा भ्रातृव्या च' इति । २४।६।१४–२१.

प्रजापशुकामस्य महाव्रते आज्यशस्त्रं होतृजनिष्ट चेतनः इत्यर्चम् । ऐआ. ११।१६.

प्रज्ञात्मा अशरीरः । ऐआ. २।१।८.

प्रज्ञानं ब्रह्म । ऐआ. २।२५।६.

प्रणवस्य सृष्टिः । प्रजापतिः तानि शुक्राणि ( व्याहृतित्रयं ) अभ्यतपत् तेभ्यस्त्रयो वर्णा अजायन्त अकार उकारो मकार इति । तानेकधा समभरत् , तदेतत् ओम् इति । २५।७।२०.

प्रतिगरः ' ॐ होतस्तथा होत.' इति अवसितेअवसिते दशसु पदेषु चतुर्होतृमन्त्रव्याख्यानस्याग्रस्य, द्वादशाहस्य दशमेऽहनि मानसग्रहे । २३।६।२०.

प्रतिगरः प्रकृतिवत् अविद्धः महाव्रते निष्केवल्ये । ऐआ. ५।६।१०.

प्रतिगरः प्रातःसवनादिषु अग्निष्टोमे ' शंसामोदैवोम् ' इति । १२।१।१, ३–४.

प्रतिगरः महान् ' मदामो दैव ' इति आग्निमारुते शस्त्रे अनुपानीयासु । १३।१४।१–२.

प्रतिगरः शौनः शेपाख्याने ऋचां ' ओम् ' इति, गाथायाः ' एवं तथा ' इति । ३३।६।१२–१३.

प्रतिज्ञा पुरोहितस्य वरणप्रयोगे ' भूर्भुवः स्वरोम् । इति । ४०।४.

प्रतिनिधिः यूपस्य स्वरुः प्रहरणे पशुकामस्य । ६।३।८.

प्रतिनिधिः हिरण्यस्य आज्यम् । ६।४।५–६.

प्रतिपत् तृचः अच्छावाकशस्त्रे अग्निष्टोमे प्रातःसवने इन्द्राग्नी आगतम् । प्रयोगे.

प्रतिपत् तृचः गायत्रः आग्निमारुते शस्त्रे छन्दोमप्रथमेऽहनि ' वैश्वानरो अजी ' २३।२।१३। छन्दोमद्वितीये ऋतावानं वैश्वानरम् । २३।४।१५ छन्दोमतृतीये वैश्वानरो न ऊतये २४।२।१६। पृष्ठ्ये षडहे द्वितीयेऽहनि पृक्षस्य वृष्णो २०।४।८। पञ्चमेऽहनि हविष्पान्तमजरम् २२।३।११.

प्रतिपत् तृचः निष्केवल्ये शस्त्रे पृष्ठ्ये षडहे चतुर्थेऽहनि पिबा सोममिन्द्र । २१।४।१३। षष्ठेऽहनि रेवतीर्नः सध । २२।७।१४.

प्रतिपत् तृचः ब्राह्मणाच्छंसिशस्त्रे अग्निष्टोमे प्रातःसवने ' आ याहि सुषुमा ' । प्रयोगे.

प्रतिपत् तृचः मरुत्वतीये शस्त्रे । प्रथमा अनुष्टुप्, उत्तरे द्वे गायत्र्यौ आ त्वा रथं यथोतय । १२।४।१-२. १३।६।५.

प्रतिपत् तृचः मरुत्वतीये शस्त्रे छन्दोमप्रथमेऽहनि आ त्वा रथं २०।३।१।१२। द्वितीयेऽहनि विश्वानरस्य विस्पतिं २३।३।१०। तृतीयेऽहनि तमिन्द्रावषे । २४।१।११.

प्रतिपत् तृचः मरुत्वतीये शस्त्रे पृष्ठ्ये षडहे प्रथमेऽहनि आ त्वा रथं २०।१।७। द्वितीयेऽहनि विश्वानरस्य वस्पतिं २०।३।६। तृतीयेऽहनि तमिन्द्रावषे २१।१।१३। चतुर्थेऽहनि तं त्वा यज्ञेभि २१।४।११। पञ्चमेऽहनि यत् पाञ्चजन्यया २२।१।८। षष्ठेऽहनि स पूर्व्यो महानाम् । २२।७।६.

प्रतिपत् तृचः मैत्रावरुणशस्त्रे अग्निष्टोमे प्रातःसवने

आ नो मित्रावरुणा । माध्यंदिने कया नश्चित्र । वैश्वदेवशस्त्रे तत् सवितुर्वृणीमहे । प्रयोगे.

प्रतिपत् तृचः वैश्वदेवशस्त्रे अग्निष्टोमे तत् सवितुर्वृणीमहे । छन्दोमप्रथमेऽहनि तत् सवितुर्वृणीमहे २३।२।६। द्वितीयेऽहनि विश्वो देवस्य नेतुः इत्येका 'तत् सवितुर्वरेण्यं इति द्वे मिलित्वा एकस्तृचः२३।४।८। तृतीयेऽहनि तत् सवितुर्वृणीमहे । २४।२।९.

प्रतिपत् तृचः वैश्वदेवशस्त्रे पृष्ठ्ये षडहे । प्रथमेऽहनि तत्सवितुर्वृणीमहे २०।२।३। द्वितीयेऽहनि विश्वो देवस्य इत्येका तत्सवितुर्वरेण्यं इति द्वे २०।३।२। तृतीयेऽहनि तत्सवितुर्वृणीमहे २१।२।६। चतुर्थेऽहनि द्वितीयाहवत् २१।५।६। पञ्चमेऽहनि तृतीयाहवत् २२।२।६। षष्ठे-ऽहनि अभि त्यं देवं इत्येका तत्सवितुर्वरेण्यं इति द्वे । २२।८।७.

प्रतिपत् नवर्चः निष्केवल्ये शस्त्रे पृष्ठ्ये षडहे पञ्चमेऽहनि महानाम्नीषु अत्र स्तुवते शाक्वरेण साम्ना, ' विदा मघवन् विदा ( १–९ ) ' । २२।२।१–४.

प्रतिपत् निष्केवल्ये महाव्रते । ' तदिदास भुवनेषु ' इति त्रिष्टुप् ' नदं व ओदतीनां ' इत्यनुष्टुप्, अनयोः पादयोः विहरणं तदिदासपादः नदंवपादः इति रीत्या । तदिदासऋचः प्रथमपादान्ते ' षु ' इत्यक्षरं, द्वितीयपादान्ते ' द ', चतुर्थपादान्ते च ' वः ' इति अक्षर. विहरणं कृत्वा ' नदं वः ' इत्यास्याः पादानां विरहण कर्तव्यं, तेन बृहतीद्वयं संपद्यते । एवं त्रिः प्रथमा ऋक् । मिलित्वा षट् बृहत्यो भवेयुः । सेयं एतावती प्रतिपत् । ऐब्रा. ११।११-१२. ११।३।१–६. ५।६।६.

प्रतिपत् प्रगाथः अच्छावाकशस्त्रे अग्निष्टोमे माध्यंदिने सोमिर्यो, निष्केवल्ये अभि त्वा शूर, आग्निमारुते यज्ञायज्ञा वो । प्रयोगे.

प्रतिपत् प्रगाथः निष्केवल्ये छन्दोमप्रथमेऽहनि त्वामिद्धि हवामहे २३।१।११ । द्वितीयेऽहनि अभि त्वा शूर २३।३।२१। तृतीयेऽहनि त्वामिद्धि हवामहे । २४।१।२१.

प्रतिपत् प्रगाथः निष्केवल्ये पृष्ठ्ये षडहे प्रथमेऽहनि अभि त्वा शूर २०।१।१३। द्वितीयेऽहनि त्वामिद्धि हवामहे २० । ३ । ११ । तृतीयेऽहनि यद् द्याव इन्द्र ते । २०।१।१८.

प्रतिपत् प्रगाथ. ब्राह्मणाच्छंसिशस्त्रे अग्निष्टोमे माध्यंदिने 'तं वो दस्म', मरुत्वतीये शस्त्रे 'आ त्वा रथम्' । प्रयोगे.

प्रतिपत् प्रातरनुवाकस्य ऋक् त्रिः पठनीया, 'आपो रेवतीः' इति । ७।६।१–६.

प्रतिपत् वैश्वदेवशस्त्रस्य तत्सवितुर्वृणीमहे ।१३।५।४.

प्रतिपत् शस्त्रारम्भे पठ्यमान अवयवविशेषः । स च ऋक् प्रगाथः तृचः सूक्तं वा भवति । प्रायः सामाधारभूतो यः स्तोत्रियो नाम तृचादिः सैव शस्त्रे प्रतिपत् । औद्गात्रे स्तोत्रियः, हौत्रे प्रतिपत् इत्युच्यते । १२।१२।४.

प्रतिपत् सूक्तं वैश्वानरीयं आग्निमारुतशस्त्रे अग्निष्टोमे वैश्वानराय पृथु १३।११।१ । पृष्ठ्ये षडहे प्रथमेऽहनि वैश्वनराय पृथु २०।२।१० द्वितीयेऽहनि 'पृक्षस्य वृष्णो अरुषस्य २०।४।८। तृतीयेऽहनि वैश्वानराय धिषणा २१।२।१४। चतुर्थेऽहनि वैश्वानराय द्युमतौ २१।५।१२ षष्ठेऽहनि 'अदर्श कृष्णमह्' । २२।१०।५.

प्रतिपदः उत्तरे द्वे ऋचौ गायत्र्यौ अग्निष्टोमे माध्यंदिने मरुत्वतीयशस्त्रे, तृतीयसवने च वैश्वदेवशस्त्रे । १३।४।२–३.

प्रतिपदः सूक्तप्रतिपदः त्रिष्टुभः अहरहः शस्येषु । एताः प्रगाथानां पुरस्तात् धाय्यात्वेन शंस्तव्याः इति केचित्त । मैत्रावरुणस्य 'अप प्राच इन्द्र',ब्राह्मणाच्छंसिनः 'ब्रह्मणा ते ब्रह्म युजा', अच्छावाकस्य उरुं नो लोकमनु इति । २९।६।१–७

प्रतिप्रस्थातुः सव्योंऽसः पशुभागः छन्ने ।३१।१।२.

प्रतिराधः नाम मन्त्रात्रयः ब्राह्मणाच्छंसिशिल्पे षष्ठेऽहनि 'भुगित्यभिगतः' इत्यादयः । तानि पदानि नार्ग । ३०।७।१९.

प्रतिष्ठाकामस्य दीक्षणीयायां घृते चरुः अग्निष्टोमे । १।१।८–११.

प्रतिहर्तुः कण्ठः काकुद्रश्च ( काकुदं ) पशुभागः छन्ने ३१।१।२.

प्रतिहारः प्रतिहर्त्रा गातव्यः पाञ्चभक्तिके चतुर्थः, साप्तभक्तिके च षष्ठः सामावयवः। १२।१२।४ सायणः।

प्रतिहारः महाव्रते। प्रस्तोतार प्रशास्ति होता। राजनाख्यस्य साम्नः पञ्चविंशस्य स्तोमस्य तिसृषु, अर्धतृतीयासु (२॥) अर्धत्रयोदशासु (१२॥) वा परिशिष्टासु (इति त्रयः पक्षाः) प्रथम प्रतिहारं प्रहृतात्' इति। 'अर्धत्रयोदशासु प्रवाचयत' इति जातूकर्ण्यः। ऐआ. ५।५।१-३.

प्रतृण्णपाठः नाम पदपाठः। ऐआ. ३।१।१-६.

प्रथमेऽहनि पृष्ठ्ये षडहे अग्निर्देवता, त्रिवृत् स्तोमः, रथंतरं साम, गायत्री छन्दः। २०।१।१-२। आज्यं, प्रउगं, मरुत्वतीयं, निष्केवल्यम्। २०।१।४-१७। वैश्वदेवं, आग्निमारुतम्। २०।२।१-१५.

प्रधानस्य याज्यानुवाक्ये दीक्षणीयाया 'अग्निर्मुखं प्रथमो देवतानां, अग्निश्च विष्णो तप उत्तमं' इति त्रिष्टुभौ।१।४।८-११.

प्रधानानां याज्यानुवाक्याः प्रायणीयोदयनीययोः। पथ्यायाः स्वस्तेः त्रिष्टुभौ 'स्वस्ति नः पथ्यासु, स्वस्तिरिद्धि प्रपथे' इति। अग्नेस्त्रिष्टुभौ 'अग्ने नय सुपथा, आ देवानामपि पन्थाम्' इति। सोमस्य त्रिष्टुभौ 'त्वं सोम प्रचिकितो, या ते धामानि दिवि' इति। सवितुर्गायत्र्यौ 'आ विश्वदेवं सत्पतिं, य इमा विश्वा जातानि' इति। अदितेर्जगत्यौ 'सुत्रामाणं पृथिवीं द्या, महीमू षु मातरं' इति। २।३।७.

प्रपदं नाम होममन्त्राः। प्रक्षिप्त पदजातं यस्मिन्नुच्चारणे, तदुच्चारणं प्रपद नाम। ३७।७।१-३ सायणः।

प्रपदहोमः महाद्युराजाभिषेके एदे आगमनोत्तरम्। एत्य गृहान्, गृहस्यापरस्मिन्देशे अन्वारब्धाय ऋत्विक् सर्वप्रयोगान्ते कंसेन चतुर्गृहीताभिस्त आज्याहुतीः ऐन्द्रीः प्रपदं जुहोति। पर्यू षु धन्वाजसातये, अनु हि त्वा सुतं सोम, अभोजनो हि पवमान इति मन्त्रमये द्वितीयपादेषु मन्त्रान्तरप्रक्षेपोऽस्ति, ते मन्त्राः वैदेकथ प्रपदं नाम। ३७।१।९; ७।१-४.

प्रमंहिष्ठीयं साम 'प्र मंहिष्ठाय गायत' इति ऋचि उत्पन्नम्। १५।५।१ सायणः।

प्रमंहिष्ठीयेन साम्ना उक्थ्यस्तोत्राणि कर्तव्यानि साकमश्वेन वा। १५।५।८-१०.

प्रयाजयाज्याः आप्रियः जामदग्न्याः 'समिद्धो अद्य मनुषो'। द्वादशाहे प्राजापत्यपशौ।१६।४।६-८.

प्रयाजाः अग्नीषोमपशौ एकादश। समिधः, तनूनपात् वसिष्ठशुनकवर्जितरेषां गोत्राणां, नराशंसः, इळः बर्हिः, दुरः, उषासा नक्ता, दैव्या होतारा, तिस्रो देवीः, त्वष्टा, वनस्पतिः, स्वाहाकृतयः इति। यथर्षि आप्रियः। ६।४।१-१६.

प्रयाजा अनुयाजाश्च प्रायणीयायां, प्रयाजाः सन्ति अनुयाजा न सन्ति, उदयनीयायां तु प्रयाजा न सन्ति अनुयाजाश्च सन्ति इति पूर्वः पक्षः। उभयत्र उभयं इति सिद्धान्तः। २।५।१-४.

प्रयाजाः पशौ यथर्षि भवन्ति। 'यथर्षि' इति शब्दे द्रष्टव्यम्। १६।४।७.

प्रयाजानुयाजनिषेधः उपसत्सु। ४।१।१.

प्रयाजेषु काम्याः प्रकाराः प्रायणीयायाम्। प्रयाजाहुतिभिः प्राङियात् ब्रह्मवर्चसकामः। दक्षिणा इयात् अन्नाद्यकामः। प्रत्यङ् इयात् पशुकामः। उदङ् इयात् भूयः सोमपीथकामः। मध्ये स्वर्गकामः।२।२।१-१०.

प्रवर्ग्यः। आख्यायिका, प्रैष., अभिष्टवः उत्तरं पटलम्।४।१-५.

प्रवर्ग्ये अभिष्टवनार्थां ऋचः। पूर्वे पटलम्। ब्रह्मजज्ञानं, इयं पित्र्ये, महान् मही (प्राग्दशपत्रा). अभि त्यं देवं (सावित्री) एताश्चतस्रः धारान्तरगता आश्वलायनेन (४।६।३) पठिताः। सं सीदस्व महान् इति महावीरस्य खरे संस्थापनार्थी। अञ्जन्ति यं इति महावीराय अज्यमानायाभिरूपा। पतङ्गमक्तं, यो नः सनुत्यो, मा नो अग्ने इति द्वे द्वे। शृणुत्व ग्रावाणः इति पञ्च रक्षोघ्न्यः। परि त्वा गिर्वणो, अधि द्वयोरदधाः, शुक्रं ते अन्यत्, अपश्यं गोपाम्। ता एकविंशतिर्भवन्ति ४।१।१-११। सखे द्रप्सस्य इति ... पावमान्यः, अयं वेनश्चोदयत्, पवित्रं ते, तपोष्पवित्रं, वियत्पवित्रं, गणानां त्वा सार्धमसावं एकोनविंशतितमं, प्रथम तृचं पर्यन्ताः नाम, अपश्यं त्वा

तृचं० काराघत् नवर्च काक्षीवतमाश्विनं, आ भात्यग्निः पञ्चर्चं त्रैष्टुभं, ग्रावाणेव षडृर्चं त्रैष्टुभं, ईळे द्यावा पञ्चविंशत्यृचं जागतं, 'अरूरुचत्' उपोत्तमा आधेया, ईळेद्यावीया उत्तमा परिधानीया । इति नु पूर्वे पटलम्। ४।३–४ । अथोत्तरं पटलम् । उपह्वये (त्रिः) हिंकृण्वती, अभित्वा देव सवितः, समी वत्सं, सं वत्स इव, यस्ते स्तनः, गौरमीमेत्, नमसेदुप, संजानाना, आ दशभिर्, दुहन्ति सप्तैकां, 'समिद्धो अग्निरश्विना, समिद्धो अग्निर्वृषणा' इति द्वे ऋचौ शाखान्तरीये आश्वलायनेन पठिते । तदु प्रयन्त, आत्मन्वन्, उत्तिष्ठ ब्राह्मणस्पते इत्यवाशितेष्वे । अधुक्षत् पिप्युषी इति धेनां दुग्धायाम् । उपद्रव पयसा इत्याहियमाणे दुग्धे। इयं शाखान्तरगता आश्वलायनेन पठिता । आ सुनमश्विनोरग्निः इति गव्ये दुग्धे आसिच्यमाने । आसुते सिञ्चत इति आजे दुग्धे आसिच्यमाने । समु त्ये महतीरपः इत्याधिश्रितयोः उदु ष्य देवः सविता हिरण्यया इति अनुत्तिष्ठति प्रैतु ब्रह्मणस्पतिः इत्यनुप्रैति। गन्धर्व इत्था पदमस्य इति खरं (महावीरस्थापनार्थी वेदिं) । अवेक्षते । नाके सुपर्णमुप इत्युपविशति । 'तप्तो वां घर्मो (इति शाखान्तरगता आश्वलायनेन पठिता) उभा पिबतमश्विना' इति द्वाभ्या पूर्वाह्णे यजति (द्वे याज्ये इत्यर्थः) । अग्ने वीहि इत्यनुवषट्कारः । 'उदुस्रियाःसृजते (शाखान्तरगता आश्वलायनेन पठिता), अस्य पिबतमश्विना' इति द्वाभ्या अपराह्णे यजति । अग्ने वीहि इत्यनुवषट्कारः । भक्षजाः 'विश्वा आशा दक्षिणसात्' (शाखान्तरगता आश्वलायनेन पठिता) इति ऋक् । होता होमादूर्ध्वं पठनीयाः एता ऋचः, 'स्वाहाकृतः शुचिर् (शाखान्तरगता आश्वलायनेन पठिता), समुद्रादूर्मिमुदियर्ति, द्रप्सः समुद्रमभि, सखे सखायं, ऊर्ध्व ऊ षु णः, उर्ध्वो नः पात्यंहसः, सं पेमित्या' इति । पावक शोचे इति मन्त्राकाङ्क्षते । हुतं हविर्मधु (ब्राह्मणपठिता) इति भर्मस्य भक्षयति । श्येनो न योनिं, आ यस्मिन् सप्त वासवाः (आश्वलायनेन पठिता) इति द्वे प्रवर्ग्यसादने । हविर्हविष्मो महि इति ऋक् उपोत्तमत्वेन आध- पनीया यददस्मादविष्यन्तो भवन्ति । सूयवसाद् भगवती इत्युत्तमया परिदधाति । अथ प्रवर्ग्यप्रशंसा । ४।५।१–१५.

प्रवर्ग्ये पयसा प्रचरति । १४।२।७.

प्रवह्लिका नाम मन्त्राः ऐतशप्रलापोत्तरं ब्राह्मणाच्छंसिशिल्पे षष्ठेऽहनि 'विततौ किरणौ द्वौ' इत्यादयः षड् अनुष्टुभः अर्धर्चशः शंसति । ३०।७।१६–१७.

प्रवासे प्राप्ते अग्न्युपस्थानम् । प्रवासादेत्य च । अहरहश्च तूष्णीमेव विनयप्रदर्शनम् । किंवा 'अभयं वोऽभयं मेऽस्तु' इति पठेत् । ३२।११।८.

प्रवासे यजमानमरणे स्वगृहे पुत्रादिः अभिवान्यवत्सायाः पयसा जुहुयात् । अपि वा यत एव कुतश्च पयसा जुहुयात् । किंवा अग्नीन् अज्स्रान् होमरहितानेव इन्धीरन् आ शरीराणामाहर्तोः । ३२ । १ । ४–६.

प्रवेशः परब्रह्मणः जीवरूपेण शरीरे । ऐआ. २।२१।७–८.

प्रस्तावः प्रस्तोत्रा गातव्यः द्वितीयः सामावयवः । १२।१२।४.

प्रस्तोतारं प्रेङ्खात्स्थो होता संशास्ति महाव्रते । 'राजनसाम्नः पञ्चविंशस्य स्तोमस्य त्रिवृत् अर्धतृतीयासु (२॥) अर्धनवोदशासु (१२॥) वा परिशिष्टासु प्रथमं प्रतिहारं प्रनुयात्' इति । ऐआ. ५।५।१–२.

प्रस्तोतुः इन्द्र सजिहे षष्ठभागः स्तो । २१।१।२.

प्रस्तोत्रा प्रथमप्रतिहारकाले प्रोक्ते होता जपति गुरुर्गोऽसि महस्वान् इत्यादि मन्त्रमयं महाव्रते। ऐआ ५।५।३–९.

प्रस्थितयाज्याः तिस्रः पोतुः उक्थे क्रतौ । १५।५।६.

प्रस्थितयाज्याः प्रातःसवने । होतुः, इदं ते सोम्यं मधु । ब्राह्मणाच्छंसिनः, इन्द्र त्वा वृषभं वयम् । मैत्रावरुणस्य, मित्रं वयं हवामहे । पोतुः, मरुतो यस्य हि क्षये । नेष्टुः, अग्ने पत्नीरिहावह । आग्नीध्रस्य, उक्षा-

नाय यज्ञानाय। अच्छावाकस्य, प्रातर्यावभिरागतम्। २८।२। माध्यंदिने। होतुः, पिबा सोममभि। मैत्रावरुणस्य, स ईं पाहि यः। ब्राह्मणाच्छंसिनः, एवा पाहि प्रत्नया। पोतुः, अर्वाङेहि सोमकामम्। नेष्टुः, तवायं सोमस्त्वमेह्यर्वाङ्। अच्छावाकस्य इन्द्राय सोमाः प्रदिवो। आग्नीध्रस्य, आ पूर्णो अस्य कलशः। २८। ३। तृतीयसवने। होतुः, इन्द्र ऋभुभिर्वाजवाद्भिः। ब्राह्मणाच्छंसिनः, इन्द्रश्च सोमं पिबतम्। मैत्रावरुणस्य, इन्द्रावरुणा सुतपा। पोतुः आ वो वहन्तु सप्तयो। नेष्टुः, अमेव नः सुहवा। अच्छावाकस्य, इन्द्राविष्णू पिबतं मध्वो। आग्नीध्रस्य, इमं स्तोममर्हते। २८।४.

प्रस्थितयाज्याना स्ताना पुरस्तात् प्रत्येकं एकैका पाड्च्छेपी ऋक् उपधातव्या पृष्ठ्ये षडहे। प्रातःसवने क्रमेण पूर्वामिन्द्र, सुषुमा यात, वनोति हि सुन्वन्, मो षु वो अस्मदभि ओ षू णो अग्ने, अर्भि होतारं मन्ये, दध्यङ् ह मन्मे ' इति ( आश्वला ८।१।२ ) माध्यंदिने तु ' पिबा सोममिन्द्र ' इत्येका, इन्द्राय हि द्यौरसुरो इति षट् ( आश्वला ८।१।४ ) २२।५।१-५.

प्रहरणं यूपस्य ( अग्नौ ) स्वर्गकामस्य।६।३।८.

प्रहरणं स्वरोरेव यूपप्रतिनिधित्वेन प्रतिष्ठाकामस्य। ६।३।८.

प्राजापत्यं पशुमालभेत द्वादशाहे दीक्षायाः पुरस्तात्। तत्र सामिधेन्यः ससदश आप्रियः जामदग्न्यः ' समिद्धो अद्य मनुषो ' इत्यादयः।१९।४।४-८.

प्राज्यापत्या ऋक् ' तन्तुं तन्वन् ' इति आग्निमारुतशस्त्रे वैष्णव्याः उत्तरं, प्राजापत्योत्तरं च ' एवा नै इन्द्रो मघवा ' इति परिधानीया। १३।१४।५-८.

प्राणः प्रपदाभ्या शरीरे प्रापद्यत आत्मा तु मूर्ध्ना। ऐआ. २।४।१.

प्राणभैषज्यार्थे इन्द्रियकल्हः। ऐआ ४।४।९-१५.

प्राणस्य वंशत्वं शरीरे। वंशो गृहस्य मध्यस्थूणा। ऐआ. ३।४।२; ७।१.

प्राणाः शरीरे द्वादश। सप्त शीर्षण्याः, द्वौ स्तन्यौ, त्रयोऽवाञ्चः नाभ्या सह। ऐआ. १।२०।७.

प्राणोपासनम्। महाव्रतगतनिष्केवल्यशस्त्रस्य प्राणदृष्ट्या उपासनम्। प्राणः सूक्ष्मदेहात्मकः। अतः सूक्ष्मदेहरूपेण उक्थोपासनं इत्युच्यते। अहमुक्थोऽस्त्र। ऐआ. २।४।२०.

प्रातःसवनं आग्नेयम्। २७।१।४-५.

प्रातःसवनं गायत्री उदयच्छत्। १३।४।२.

प्रातःसवनं द्विनाराशंसम्। ८।६।३.

प्रातःसवने अच्छावाकशस्त्रं अग्निष्टोमे (आज्यं) ' इन्द्राग्नी आगतं सुतं ' इति। प्रयोगे।

प्रातःसवने अच्छावाकशस्त्रं चतुर्विंशे महाव्रते च ' आ सुते सिञ्चत ' इति। ऐआ. ५।१।५.

प्रातःसवने अच्छावाकस्य परिधानीया .' आहं सरस्वतीवतोः।' सा च युक्तियोगः। २१।७।२.

प्रातःसवने उन्नीयमानसूक्तं ( मैत्रावरुणस्य ) ऐन्द्रीर्गायत्रीरेव ' आ त्वा वहन्तु हरयः ' इत्यादयः। आदिमाः शतेवेति के चित्, तन्न। २८।१।१-१२.

प्रातःसवने नव ग्रहा गृह्यन्ते ( धाराग्रहाः ), नवभिः पवमाने स्तुवते। अग्निष्टोमे। ११।१।१.

प्रातःसवने प्रतिगरः ' शंसामो दैवोम् ' इति। २२।१।१.

प्रातःसवने प्रस्थितयाज्याः। २८।२।१-१०। प्रस्थितयाज्या शब्दे द०।

प्रातःसवने बहिष्पवमानोत्तरं आज्यशस्त्रं, ततः प्रउगम्। १०।५।१.

प्रातःसवने ब्राह्मणाच्छंसिनः अग्निष्टोमे परिधानीया ' स न इन्द्रः शिवः सखा ' इति। विकृतौ तु ' इन्द्रेण रोचना दिवः ' इति। २७।४।५.

प्रातःसवने ब्राह्मणाच्छंसिनः अहीने ' व्यन्तरिक्ष ' इति पर्यासतृचः। ' इन्द्रेण रोचना दिवः ' इति परिधानीया। २९।७।२.

प्रातःसवने ब्राह्मणाच्छंसिशस्त्रं अग्निष्टोमे ' आ याहि सुषुमा हि ' इति। चतुर्विंशे महाव्रते च ' गुह्वत्कृत्नुमूतये ' इति। ऐआ. ५।१।५.

प्रातःसवने ब्राह्मणाच्छंसिशस्त्रस्य अग्निष्टोमे स्तोत्रियतृचः निरुद्धेषु महिषी, अनुरूपतृचः ' एन्द्रया हुप नः ' इत्येका, ' इन्द्राय हि द्यौः ' इत्येका

'ग्रीष्मर्तौ' इत्येका इति मिलित्वा । प्रयोगे । प्रातःसवने '"भूरिन्द्रवन्तः स्तुध्वं' इति ब्रह्मा स्तोत्रप्रसवमाह। .२५।९।५-६.

प्रातःसवने मन्द्रया वाचा शंसेत् । माध्यंदिने बलीयस्या वाचा ।"तृतीयसवने बलिष्टतमया वाचा। उत्साहानुसारेण उत्तरोत्तरिण्या वाचा शंसेत् । १४।६।५.

प्रातःसवने माध्यंदिने च षष्ठेऽहनि प्रस्थितयाज्यानां पुरस्तात् प्रत्येकं एकैकां पारुच्छेपीं उपदध्यात् । २२।५।१-५.

प्रातःसवने मैत्रावरुणस्य अग्निष्टोमे अहीने च परिधानीया ते स्याम देव वरुण । ब्राह्मणाच्छंसिनः अग्निष्टोमे 'स न इन्द्रः शिवः सखा' इति, विकृतौ तु 'इन्द्रेण रोचना दिवः।' अच्छावाकस्य अग्निष्टोमे गोमद्धिरण्यवत्, विकृतौ तु आहं सरस्वतीवतोः इति । २७।४।२; ५।२.

प्रातःसवने मैत्रावरुणशस्त्रं अग्निष्टोमे 'आ नो मित्रावरुणा घृतैः' इत्यादि । ऐआ. ५।१।५ सायणः । चतुर्विंशे महाव्रते च 'ता नः शक्तं पार्थिवस्य' इति । ऐआ. ५।१।५ सायणः ।

प्रातःसवने याज्या अनवानम् । २७।५।६.

प्रातःसवने शस्त्रजपः होतुः 'उक्थं वाचि' इति चतुरक्षरम् । अध्वर्योः 'ओंमुक्थशाः' इति चतुरक्षरम्। १२।१।२.

प्रातःसवने शस्त्राणां पुरस्तात् निविद्धानम् । ११।१०-११.

प्रातःसवने स्तोमविवृद्धौ अतिशंसनं एकया द्वाभ्यां वा, नाधिकया । २७।५।७-८. २९।७।१०-११ सायणः ।

प्रातरनुवाकः । प्रैषः 'देवेभ्यः प्रातर्यावभ्यो होतरनुब्रूहि' इत्याद्यध्वर्युः । महति रात्र्ये अनूच्यः पुरा वाचः प्रवदितोरनूच्यः, पुरा शकुनिवादादनुब्रूयात् । अथो खलु यदैवाध्वर्युरुपाकुर्यात् (प्रैषं दद्यात्) अथानुब्रूयात् ।७।५।१।१५। शतमनूच्यमायुष्कामस्य । त्रीणि च शतानि षष्टिश्चानूच्यानि यज्ञकामस्य । सप्त च शतानि विंशतिश्चानूच्यानि प्रजापशुकामस्य । अष्टौ शतान्यनूच्यानि अब्राह्मणोक्तस्य, यो वा दुरुक्तोक्तः शमलगृहीतो यजेत । सहस्रमनूच्यं स्वर्गकामस्य । अपरिमितमनूच्यं सर्वेषां कामानामवरुध्यै । सप्त आग्नेयानि छन्दांस्यन्वाह । छन्दःक्रमश्च गायत्री अनुष्टुप् त्रिष्टुप् बृहती उष्णिक् जगती पङ्क्तिः इति । सप्त उषस्यानि छन्दांस्यन्वाह । सप्त आश्विनानि छन्दांस्यन्वाह । ७।७।१-११। 'आपो रेवतीः' इत्यनया ऋचा आरम्भः । ७।६।१-६ । पञ्चः अनूच्यः इति केचित् । अर्धर्चश एवानूच्यः इति सिद्धान्तः । ७।८।१-४ । 'अभूदुषा रुशत्पशुः' इत्युत्तमया परिदधाति । ७।८।१२। (आश्वला ४।१३-१५.)

प्रातरनुवाकस्य व्यूढस्य सतः अव्यूढत्वं बृहतीमध्यकत्वात् । ७।८।५.

प्रातरनुवाके न्यूङ्खः प्रथमपादे द्व्यक्षरेण चतुर्थेऽहनि पृष्ठ्ये षडहे ।२१।३।१०.

प्रायणीया शंयन्ता । १५।१।२.

प्रायणीये धाय्यारहिताः समिधेन्यः पञ्चदश । १४।२।४.

प्रायणीयोदयनीये अग्निष्टोमे । होता एकः, देवताः, देवताक्रमः, प्रयाजानां काम्याः प्रकाराः, याज्यानुवाक्याः प्रधानानां, संयाज्ये, प्रयाजानुयाजाः, पत्नीसंयाजास्तु न सन्ति, समिष्टयजुश्च नास्ति, प्रायणीयानिष्काशे, स्थाल्यां वा उदयनीयानिर्वापः, व्यतिषङ्गो याज्याऽनुवाक्यानां, द्रव्यं आदित्यश्चरुः प्रायणीयो भवति आदित्यश्चरुरुदयनीयः इत्येषा चतुर्णामाज्यम् । (आश्वला ६।१४।३) (तत्तच्छब्दे तत्तद्विशेषा द्रष्टव्याः) ३११-५.

प्रायश्चित्तं अग्नौ अग्नेरुद्धरणे । 'उद्धरणे' इत्यत्र द्र० ३२।५।१.

प्रायश्चित्तं अग्निदाहे । 'अग्नयः प्राग्धेन' इत्यत्र द्र० ३२।६।१.

प्रायश्चित्तं अग्निनाशे । 'अग्निनाशे' इत्यत्र । 'अग्नीनां प्रयाणामपि उपशान्तौ' इत्यत्र द्र० ३२।४।८; १२।७।४.

प्रायश्चित्तं अग्निषु 'अन्तरागमने' इत्यत्र द्र० । ३२।११।३,७.

प्रायश्चित्तं अग्निसंसर्गे । 'गार्हपत्याहवनीययोः' इत्यत्र, अग्नीना त्रयाणा' इत्यत्र, 'अन्यैरग्निभिः' इत्यत्र, 'अग्नीनां दिव्येनाग्निना' इत्यत्र, 'शवाग्निना' इत्यत्र च द्रष्टव्यम् । ३२।५-६.

प्रायश्चित्त 'अग्निहोत्रदोहकाले' इत्यत्र द्र० । धेनुः यदि उपविशेत्, यदि वाश्येत, यदि स्पन्देन पयः स्कन्दयेत् । २५।२।७-११; ३२।२।१-४.

(इत उत्तरं अवतरणचिह्नयुक्ते शब्दे तत्तत् प्रायश्चित्तं द्रष्टव्यम्, पौनरुक्त्यभयात् अत्र न विवृतम्)

प्रायश्चित्तं अग्निहोत्रहविषि अमेध्यपाते । 'अग्निहोत्र अधिश्रित अमेध्य' इत्यत्र । ३२।४।१.

प्रायश्चित्तं अमावास्यायाः पौर्णमास्याः वा 'अत्यये' ३२।७।३.

प्रायश्चित्तं 'अविज्ञातप्रायश्चित्तं' । २५।७।५.

प्रायश्चित्तं 'अस्नातेन' अग्निहोत्रहोमे कृते । ३२।८।५.

प्रायश्चित्तं 'आग्रयणेनानिष्ट्वा' नवान्नप्राशने । ३२।८।९.

प्रायश्चित्तं आरण्येनाग्निना विहारस्थाग्निना संसर्गे, अग्नये क्षामवते अष्टाकपालं निर्वपेत्, तस्य याज्यानु-वाक्ये अक्रन्ददग्निः स्तनयन्, अधा यथा नः पितरः इति । आहुतिं वा आहवनीये जुहुयात् अग्नये क्षामवते स्वाहा इति । ३२।५।४.

प्रायश्चित्त आर्त्विज्यदोषनिरासार्थं पृष्ठस्तोत्रे वामदे-व्यसामगाने 'अभी षु णः सखीना पु', 'अविता जरितॄणा व,' 'शतं भवास्यूतिभिः वः' इति पुरुषपदाक्ष-राणि प्रक्षिप्य उद्गातारः गायेयुः । नित्येऽप्येतत् कर्तव्यम्। १५।२।६-१०.

प्रायश्चित्तं आहिताग्निना उपवसथदिने 'अश्रुकरणे' । ३२।७।१.

प्रायश्चित्तं 'अधिश्रिते' अग्निहोत्रे, स्नानाप्स्ये, हवि षु वा आहिताग्नेर्मरणे ।३२।१।२.

प्रायश्चित्तं आहिताग्नेः उपवसथदिने 'अव्रत्याचरणे' ३२।७।२.

प्रायश्चित्तं आहिताग्नेः उपवसथदिने मरणे । ३२।१।१.

प्रायश्चित्तं प्रवासे यजमानमरणे ।३२।१।४-६.

प्रायश्चित्तं प्रवासे मरणेन अस्थ्यादीनामलाभे यदि शरीराणि (अस्थीनि) न विन्देरन् पर्णशरः कर्तव्यः । 'प्रेताग्निविनाशे' । ३२।१।७-९.

प्रायश्चित्तं आहिताग्नेः 'हविःषु वेद्यामासन्नेषु' मरणे । ३३।१।३.

प्रायश्चित्तं उद्धरणाभावे 'सूर्यास्तमये' 'सूर्योदये' च । ३२।११।१-२.

प्रायश्चित्तं ऋक्तः आर्तौ 'भूः' इति गार्हपत्ये जुहु-यात्, यजुष्टः आर्तौ 'भुवः' इति यज्ञे आग्नीध्रीये' हविर्यज्ञेषु च 'अन्वाहार्यपचने । सामतः आर्तौ 'स्वः' इत्याहवनीये । अविज्ञातायामार्तौ सर्वतो वा आर्तौ 'भूर्भुवःस्वः' इति सर्वाभिः आहवनीये एव ।२५।७।५। एतत् ब्रह्मा करोति । २५।९।४.

प्रायश्चित्तं 'कपालनाशे' । ३२।८।१.

प्रायश्चित्त 'जीवति मृतशब्दश्रवणे' ।३२।८।७.

प्रायश्चित्त निविद्धानविस्मरणे । अन्यत् तद्दैवत्यं तच्छन्दस्कं सूक्तमाहृत्य तस्मिन् निविदं दध्यात् । आहतात् सूक्तात् प्राक् 'मा प्रगाम पथो वयं' इति तृचं सूक्तं पठेत् । सैव तत्र प्रायश्चित्तिः । ११।११।-१४-२२.

प्रायश्चित्तं 'पवित्रकनाशे' । ३२।८।३.

प्रायश्चित्तं प्रायः नाम नाशः तस्य चित्तं समाधानम् । प्रायश्चित्तिरपि तदेव । ३२।१।२ सायणः ।

प्रायश्चित्तं भिन्ने 'स्रुक्' इत्यत्र । ३२।४।७.

प्रायश्चित्तं 'सूतकान्नभक्षणे' । ३२।८।६.

प्रायश्चित्तं स्त्रिया गवि वा 'यमलजनने' । ३२।८।८

प्रायश्चित्तं 'हविर्दोषादिविषये' । ३२।३।४; ४।१.

प्रायश्चित्तं 'हिरण्यनाशे' । ३२।८।४.

प्रायश्चित्तानि निम्नलिखितं उक्तानि । मरणे ३२।१। दोहविषये ।३२।२। हविर्दोषे ।३२।३। हविषि अमेध्यपाते, स्कन्ने, स्खलने भ्रेषे वा, भिन्ने, अग्निनाशे ।

३२।४। उद्धरणविषये, अग्न्युत्सर्गे ।३२।५; ६।२-३। अग्नीना केन चिदन्येनाग्निना दाहे ।३२।६। अश्रुकरणे, अप्रत्याचरणे, यागात्यये, अग्नीना उपशान्तौ ।३२।७। आग्रयणाकरणे, कपालनाशे, पवित्रनाशे, हिरण्यनाशे, अस्नातेन होमे, सूतकान्नभक्षणे, जीवति मृतशब्दश्रवणे, यमलजनने । ३२।८.

प्रार्थनामन्त्रः, शान्तिमन्त्रः । वाङ्मे मनसि प्रतिष्ठिता, मनो मे वाचि प्रतिष्ठितम् । आविरावीर्म एधि, वेदस्य म आणी स्थ', श्रुतं मे मा प्रहासीः, अनेनाधीतेनाहोरात्रान् सदधामि,ऋतं वदिष्यामि,सत्यं वदिष्यामि, तन्मामवतु तद् वक्तारमवतु, अवतु मा, अवतु वक्तारमवतु वक्तारम् । ऐआ. २।२६।१.

प्रासाहः=बाहुल्यम् । जगत्प्रासाहाः जगतीच्छन्दस्कप्रगाथबहुलाः तृतीयसवनगताः प्रस्थितयाज्याः । २८।४।-१५ सायणः । वसिष्ठप्रासाहाः निष्केवल्यस्य उत्तरः पक्षः । तामिम वसिष्ठो मुनिः स्वसामर्थ्येन संपादितवान्, अतोऽयं वसिष्ठप्रासाहः । एव भरद्वाजप्रासाहः । ५।८।७.

प्रियङ्गूनां तोक्मानि चमसे पात्र्यां वा समोप्यानि ऐन्द्रमहाभिषेके संभारः । ३९।२-३.

प्रेङ्खसमारुह्य शस्यते महाव्रते निष्केवल्य शस्त्रम् । तस्य फलक एकमेवेति ये चित्, त्रीणीत्यन्ये, द्वे इति सिद्धान्तः । द्वे फलके औदुम्बरे भूमिवीतययोर्मध्ये । उद्भूते स्याता भूमि वीतय च ( तिर्यक्काष्ठ उपरितन ) यथा न स्पृशेयाताम् । रज्जवः दक्षिणावृताश्च सव्यावृताश्चेति उभय्यः, दार्भ्यः । प्रेङ्खस्य उद्धरण अरत्निमात्रे भूमेरुपरि इति के चित् । प्रादेशमात्रे इत्यन्ये । मुष्टिमात्रे इति सिद्धान्तः । पुशुकेन उपस्पृशेत् अधिरोहणकाले गुरुवत् । अरत्निभ्यामधिरोहेत् श्येनवत् । एक पाद भूमौ स्थापयेत् । प्रेङ्ख होता अधिरोहति । उद्गाता औदुम्बरीमासन्दीम् । होत्रकाः समासदः बृसीः अधिरोहन्ति । होता पश्चात् प्रेङ्खस्य प्रेङ्खादवरोहेत् । इति के चित्, प्राक् दाले गहीत्वा अवरोहेत् इत्यन्ये । प्राङ् इत्वा अवरोहेत् इति सिद्धान्तः । प्राङ् अवरोहेत् । ऐआ. १।७-८.

प्रेङ्खं होता दार्ढ्यपरीक्षणार्थं चालयति । ' भूतेभ्यस्त्वा ' इति । पश्चार्धे फलके पाणी प्रतिष्ठापयति । ' प्राणमनु प्रेङ्खस्व ' इति प्राञ्चं प्रेङ्खं प्रणयति । ' व्यानमन्वीङ्खस्व ' इति तिर्यञ्चम् । अपानमन्वीङ्खस्व इत्यभ्यात्मम् । भूर्भुवःस्वोरिति जपति । ' प्राणाय त्वा ' इति प्राञ्चमेव पुनश्चालयति, व्यानाय त्वा इति तिर्यञ्च, अपानाय त्वा इति अभ्यात्मम् । ऐआ. ५।४।८-१०.

प्रेङ्खः महाव्रते माध्यदिने अध्वर्युभिरुपकल्पनीयः । ऐआ. ५।४।१ सायणः ।

प्रेङ्खः महाव्रते माध्यंदिने सदःप्रवेशात् पुरस्तात् उपक्लृप्तो भवति । स्थूणे रज्जू वीवधः इत्येतत् प्रक्षाल्य तीर्थेन प्रपाद्य उत्तरेणाग्नीध्रीय परिव्रज्य पूर्वया द्वारा सदः, सर्वान् धिष्ण्यानुत्तरेण । औदुम्बराणि काष्ठानि प्रेङ्खस्य भवन्ति, पालाशानि, मिश्राणि वा । त्रीणि फलकानि उभयतस्तष्टानि, द्वे वा, सूच्यश्च तावत्यः । इषुमात्रः प्राङ् प्रेङ्खः, निमुष्टिकः ( मुष्टिन्यूनेषुमात्रः ) तिर्यङ् ( प्राङ् = रुंदी, तिर्यङ् = लांबी ) । उदगग्रः प्रागग्राभ्यां सूचीभ्यां समुतः (प्रोतः=ओत भरणे) । दक्षिणोत्तरे स्थूणे निखाय अभितो होतृषदनं वीवधमस्यादधाति आस्यदभिव यजमानस्य । प्रेङ्खस्य कुष्ठासु ( कोणेषु चतुर्षु ) छिद्राणि भवन्ति,रज्जुभ्यामूर्ध्वमुद्वयति, दक्षिणतो दक्षिणया ( दक्षिणावृतया रज्ज्वा ), उत्तरतः सव्यया ( सव्यावृतया रज्ज्वा ) । दार्भ्ये त्रिगुणे स्याता रज्जू । सव्यदक्षिणे पञ्चव्यामे द्विगुणे, वीवधे त्रिः प्रदक्षिणं पर्यस्य ऊर्ध्वग्रन्थि निष्कर्षे (सुरगाठ) बध्नाति । शाखाभिः बृसीभिर्वा परिकषन्ति ( पांघरूं अथवा पर्युहेत् ) अप्रकम्प्र यथा स्यात् । चतुरङ्गुलेन एव विभूमः ( भुई सोडून वर ) प्रेङ्खः स्यात् मुष्टिमात्रेण वा । दक्षिणतः उदग्दिवतरः ( दक्षिणेस जरा उंच ) । प्रपदमात्रे धिष्ण्यात् । ऐआ. ५।३।२-१२.

प्रेताग्निविनाशे पर्णशरः । पष्टिः त्रीणि च शतानि पलाशवृन्तानि ( पान.चे दांडे ) आदाय तेषा पुरुषरूपकमिव कृत्वा अग्नीन् तैः संस्पर्श्य उद्वासयेयुः । दहनपिण्डदानादि च कुर्युः । तत्र ( १५० ) वृन्तानि

शरीरमध्ये, ७०+७० सक्थिनी, २५+२५ ऊरू, शेषं (२०) शिरसि इति पुरुषरूपकक्लृप्तिः। ३२।१।७-९.

प्रैयमेधाः (प्रियमेधपुत्राः) ऋषयः उदमयं नाम अङ्गराजपुरोहितं अयाजयन्। ३९।८।४.

प्रैषः। अग्निप्रणयने 'अग्नये प्रणीयमानायानुब्रूहि' इत्याहाध्वर्यु.। ५।२।१। अग्निमन्थनीयाऽनुवचने 'अग्नये मथ्यमानायानुब्रूहि' इति। ३।५।२। अग्निहोत्रे उद्धरणे 'उद्धराहवनीय' इति। २५।१।१२। अग्नीषोमप्रणयनीयासु अग्निष्टोमे 'अग्नीषोमाभ्यां प्रणीयमानाभ्यामनुब्रूहि' इति। ५।४।१। अग्निगौ मैत्रावरुणं प्रति, 'उपप्रेष्य होतर्हव्या देवेभ्यः' इति। ६।५।६। उच्छ्रयणे यूपस्य 'यूपायोच्छ्रीयमाणायानुब्रूहि' 'उच्छ्रीयमाणायानुब्रूहि' इति वा (आपस्तम्बः)। ६।२।६- सायणः। धर्मसंभरणविधौ (प्रवर्ग्याभिष्टवने) 'ब्रह्मन् प्रवर्ग्येण प्रचरिष्यामो होतरभिष्टुहि' इति अध्वर्युः प्रतिप्रस्थाता च। ४।१।३। पशुप्रयाजस्य उत्तमस्य 'होता यक्षदग्निं स्वाहा०' इति प्रैषसूक्ते अन्तिमः। ७।३।१-२ सायणः। पशोः पर्यग्निकरणानुवचने 'पर्यग्नये क्रियमाणायानुब्रूहि' इति। ६।५।१। प्राचीनवंशे सोमे नीयमाने 'सोमाय क्रीताय प्रोह्यमाणायानुब्रूहि' इति। ३।२।१। प्रातरनुवाके 'देवेभ्यः प्रातर्यावभ्यो होतरनुब्रूहि' इति।७।५।१। मनोताऽनुवचने 'मनोतायै हविषोऽवदीयमानायानुब्रूहि' इति। ६।१०।१। यूपस्याञ्जनानुवचने 'अञ्जो यूपमनुब्रूहि' इति। ६।२।१। यूपस्य परिव्याणे 'यूपाय परिवीयमाणायानुब्रूहि' इति।६।२।१२। षष्ठेऽहनि ऋतुयाजेषु मैत्रावरुणेन ऋक्शिरस्कप्रैषमन्त्रोच्चारं पठनीयः,न तु अग्निष्टोमे इव केवलप्रैषमन्त्रोच्चारम्। २२।४।१-६। सोमप्रोहणानुवचनीयासु 'सोमाय क्रीताय प्रोह्यमाणायानुब्रूहि'। ३।२।१। स्तोकानुवचनीयासु वपां स्रुवेणाभिघारयन्नाहाध्वर्युः, 'स्तोकेभ्योऽनुब्रूहि' इति।७।२।१-२। हविर्धानप्रवर्तनीयासु 'हविर्धानाभ्यां प्रोह्यमाणाभ्यामनुब्रूहि' इति। ५।३।१। प्रस्थितङ् प्रेष्यति। ११।९।६-८.

प्रैषसूक्ते (५।२,८) पोत्रः षड्ऋचामो, उत्तमे कठो। १५।५।६.

प्रोहणं (शकटेन नयनं) सोमस्य क्रीतस्य प्राग्वंशे अग्निष्टोमे।३।१-२.

प्लक्षस्य फलानि चमसे पात्र्यां वा समोप्यानि ऐन्द्रमहाभिषेके संभारः। ३९।२-३.

फलकानि प्रेङ्खस्य त्रीणि द्वे वा उभयतष्टानि महाव्रते माध्यंदिने निष्केवल्यार्थम्। ऐआ. ५।३।५.

फलचमसः क्षत्रियस्य। न्यग्रोधावरोहान् औदुम्बर-आश्वत्थ-प्लाक्षाणि च फलानि पुरस्तादुपक्लृप्तानि भवन्ति। अथ सोमं राजानं क्रीणन्ति। राज्ञ एवावृता (रीत्या) उपनहनपर्यन्तं चरेत् (पूजयेत् फलानि)। यदा राजानं प्रातरभिषुण्वन्ति तदा एतानि द्वेधा विगृह्णीयात्, एकं भागमभिषुणुयात् अपरं भागं माध्यंदिनाय परिशिंष्यात्। ३५।६।४ चमसान् यदा उन्नयेयुः, तदा यजमानचमसमुन्नयेत्, तस्मिन् द्वे दर्भतरुणके प्रास्ते स्याताम्। तयोः पूर्वं (एकं दर्भं) वषट्कृते अन्तःपरिधि प्रास्येत् दधिक्राव्णो अकारिषं इत्येतयर्चा सस्वाहाकारया। अनुवषट्कृते अपरं (दर्भं) 'आ दधिक्राः शवसा' इति। यदा एतांश्चमसानाहरेयुः तद् एतं यजमानचमसमाहरेत्। तान् यदा उद्गृह्णीयुः तद् एनं उपोद्गृह्णीयात्। यदा होता चमसं भक्षयेत् अथैनं 'यदत्र शिष्टं रसिनः' इति भक्षयेत् (क्षत्रियो वैश्यो वा यजमानः)। 'शं न एधि हृदे०' इत्यात्मनः प्रत्यभिमर्शः। 'आप्यायस्व समेतु ते, सं ते पयांसि' इति द्वाभ्यां चमसमाप्याययति।३५।७।१-७। तथा च फलचमसस्य उन्नयनं, होमः, भक्षः, आत्मस्पर्शः, आप्यायनं, आसादनं, प्रकम्पनं, नाराशंसभक्षणं, आत्मस्पर्शः, आप्यायनं इति कर्माणि भवन्ति, मन्त्रास्तु सोमचमसादन्ये। ३५।८।१।६.

फलचमसकर्तारो महाक्षत्रियाः तदनुज्ञापका ऋषयश्च।

ऋषयः

रामो मार्गवः स्वारजः

तुरः कावषेयः

राजानः

विश्वंतरः सौषद्मनः

जनमेजयः पारिक्षितः

| | |
|---|---|
| पर्वतनारदौ | सोमकः साहदेव्यः<br>सहदेवः सार्ञ्जयः ( सृञ्जय )<br>बभ्रुः दैवावृधः<br>भीमः वैदर्भः<br>नग्नजित् गान्धारः |
| अग्निः | सनःश्रुतः अरिंदमः<br>क्रतुविद् जानकिः |
| वसिष्ठः | सुदाः पैजवनः |

३५।८।७-१०.

फलचमसप्रशंसा । महाराजो भवति । आदित्य इव श्रियां प्रतिष्ठितस्तपति । सर्वाभ्यो दिग्भ्यो बलिमावहति । उग्रं हास्य राष्ट्रमव्यथ्यं भवति । ३५।८।९.

बद्वम् = कोटिशतम् । ३९।८।४ । बद्वं वृन्दं इति पर्यायौ ।३९।९।३ सायणः । द्वे द्वे सहस्रं बद्वानाम् । ३९।८।४। शतं बद्वानि दश च नगान् ददौ ।३९।९।३। बद्वशो गा विभेजिरे सहस्रं ब्राह्मणाः ।३९।९।४। श्रीमद्भागवते टीकायां श्रीधरेस्तु बद्वं = १३०८० इति संख्या उक्ता ।

बहिष्पवमानस्य उपास्मै गायता नरः इति स्तोत्रियः । १२।३।१.

बहिष्पवमाने नवभिर्ऋग्भिः स्तुवते उद्गातारः । उपास्मै, दविद्युतत्या, पवस्व इति प्रथमतृचाः । तत्र आग्नेयो ग्रहो गृह्यते दशमतृचेन, हूयते च तृतीयतृचेन । ११।१।१.

बहिष्पवमाने होता सर्पेदित्येके, न सर्पेदिति सिद्धान्तः किंतु तमेवासीनः ' भो देवानामिद ', ' युष्ममधि युर्ं भूमाहे ' इति चानुमन्त्रयेत । ८।४।१-९.

बहिष्पवमानोऽयं आग्नयस्यं ताः प्रजगन् । १०।५।१.

बहुपत्नीकस्य पुरुषस्य, एकपतिकत्वं च स्त्रियाः । ' तस्मादेकस्य बह्व्यो जाया भवन्ति नैकस्यै बहवः सह पतयः ' । न तु निरर्थेन एकस्याः स्त्रियाः बहवः पतयः परस्परेभ्यः नेन पर्यायेण दृश्यन्ते इति भावः ( बहवः पतयः देवनाचेन पर्यायेण दृश्यन्ते वा नहिं । इति दृष्टान्ती भेदः ) ।१२।११।१.

बार्हती तृचाशीतिः महाव्रते निष्केवल्ये शस्त्रे । ' मा चिदन्यद्विशंसत ' इति एकपानत्रिंशत् ( २९ ), पिबा सुतस्य रसिनः इति विंशतेः सप्तमीं चाष्टमीं चोद्धरति, ' यदिन्द्र प्रागपागुदक् ' इति चतुर्दश, वयं घत्वा सुतावन्तः इति पञ्चदश, मो षु त्वा वाघतश्चन इत्येतस्य द्विपदां चोद्धरति राथंतरं च प्रगाथं ( अभि त्वा शूर इति ऋग्द्वयमुद्धरति ) । अथ हास्य नाकिः सुदासो रथं इत्येतं प्रगाथमुद्धृत्य ( तस्य स्थाने ) त्वामिदा ह्यो नरः इत्येतं प्रगाथं प्रत्यवदधाति, आभि प्र वः सुराधसं इति षड् वालखिल्यानां सूक्तानि, यः सत्राहा विचर्षणिः इति(त्वामिद्धि हवामहे इति सूक्तस्य द्वादशऋगात्मकः)—शेषः, अयं ते अस्तु हर्यतः इति सूक्ते ( अयं ते, आमन्द्रैः इति द्वे सूक्ते इत्यर्थः ), उभयं शृणवच्च नः इति ( सूक्तं, तत्र ) सप्तमीं चाष्टमीं चोद्धरति, यो भिर्वो विदद्वसु ( इति सूक्तं, तत्र ) उत्तमामुद्धरति, यो राजा चर्षणीनां इत्येकादश, तं वो दस्ममृतीषहं (सूक्तं), आ नो विश्वासु हव्यः ( सूक्तं ), या इन्द्र भुज आभर इति नव, षड्दोहाः । इति । ऐआ. ५।१०।१-३.

बृसी=कूर्चः तृणशलाकादिनिर्मितः आसनविशेषः । ऐभा. । १।८।१३ सायणः । तपस्विनामासनार्थं तृणकलीतालपत्रवेणुदलादिनिर्मितः आसनविशेषः । ऐआ. ५।३।१ सायणः ।

बृहतः अनुरूपः प्रगाथः त्वं ह्येहि चेरवे इति । २०।३।११.

बृहतः योनिः प्रगाथः त्वामिद्धि हवामहे । २०।३।११.

बृहतः पक्षात् वैराजस्य सृष्टिः रैवतस्य च । १९।६।२,४.

बृहतीसहस्रं महाव्रते निष्केवल्ये शस्त्रे ( अत्र साक्षात् ऋचां सहस्रं नास्ति, किं तु अक्षरादिगणनयैव कथा चिद् युक्त्या । ऐआ. २।१२.

बृहद्दिवं नाम सूक्तं 'तदिदास भुवनेषु ज्येष्ठं' इति । तत्र गवामयने चतुर्विंशाख्ये द्वितीयेऽहनि महाव्रताख्ये च उपान्त्येऽहनि शस्तं निष्केवल्ये शस्त्रे । १७।८।१-२.

बृहद्रथंतरयोर्विकल्पस्तत्त्वनिर्णयो विधिः ।१७।७।१-७.

बृहस्पतिर्वै वै देवाना पुरोहितः, तमनु अन्ये मनुष्यराज्ञा पुरोहिताः । ४०।२।४.

बृहस्पतेः सृष्टिः । प्रजापतेः रेतःपिण्डस्य प्रदीप्तस्य अङ्गाराः पुनरवशान्ताः उददीप्यन्त तद् बृहस्पतिरभवत् । १३।१०।१.

बैल्वः यूपः अन्नाद्यकामस्य पुष्टिकामस्य च । ६।१।६–९.

ब्रह्मचारिपुंश्चल्योः संप्रवादः महाव्रते । स च साम-ब्राह्मणे दर्शित. । ऐआ. ५।५।१३.

ब्रह्मजपः प्रवर्ग्ये 'विश्वा आशा दक्षिणसत्' इत्यादिः सौत्रो मन्त्रः ।४।५।७.

ब्रह्मणः जीवरूपेण शरीरे प्रवेशः।ऐआ।२।२-।७–८.

ब्रह्मणः परिमरोपासना तदङ्गजपश्च पुरोहितस्य । ४०।५।१–२०.

ब्रह्मणः रुव्या श्रोणिः पशुभागः सत्रे ।२१।१।२.

ब्रह्मणे यजमानस्य क्षत्रियस्य (वैश्यस्य च) भागो देयः दीक्षणीयादिषु । अग्नौ दैवे जुहोति 'प्रजापते विभान्नाम लोक०' इति मन्त्रेण, तत्र तथा । ३४।८।१–६.

ब्रह्मत्वम् । यदेतत् त्रय्यै विद्यायै शुक्र (व्याहृतित्रय) तेन ब्रह्मत्वमकरोत् । २५।७।२ । केन ब्रह्मत्वं क्रियते इति (प्रश्ने) त्रय्या विद्यया इति ब्रूयात् । २५।८।१ । यदि यज्ञे ऋक्त आर्तिर्भवति, भूरिति गार्हपत्ये जुहवाथ, यदि यजुष्ट., भुव इत्याग्नीध्रीये (सोमे) अन्वाहार्यपचने वा हविर्यज्ञेषु ।, यदि सामतः, स्वरित्याहवनीये, यद्य विज्ञाता सर्वव्यापद् वा, भूर्भुवःस्वरिति आहवनीये एव जुहवाथ । २५।७।५ । ब्रह्मा उपाकृते प्रातरनुवाके वाचयमः स्यात् आ उपांश्वन्तर्यामयोर्होमात्, उपाकृतेषु पवमानेषु आ उदृच. (समाप्तिपर्यन्तम्), अथ यानि स्तोत्राणि शस्त्राणि आ तेषां वषट्कारात् । प्रस्तोता उपाकृते स्तोत्रे आह 'ब्रह्मन् प्रस्तोष्यामः प्रशास्तः' इति, स भूरिति ब्रह्मा प्रातःसवने ब्रूयात्, भुव इति माध्यंदिने, स्वरिति तृतीयसवने, भूर्भुवः स्वरित्युक्थ्ये वा अतिरात्रे वा ब्रूयात् । प्रत्येतान्ते च 'इन्द्रवन्तः स्तुध्वं' इति ब्रूयात् । २५।१।५.

ब्रह्मवर्चसकामः अपोनप्त्रीये एकधनासु अमूर्या उप सूर्ये इत्यनया अनुप्रपद्येत । ८।२।२२.

ब्रह्मवर्चसकामस्य पालाशो यूपः । ६।१।१०–१३.

ब्रह्मा ऋत्विक् वसिष्ठः स्यात् । ऐआ ।३।९।६.

ब्रह्माणं नमस्करोति त्रि. अधस्तादासीनो राजा, 'नमो ब्रह्मणे नमो ब्रह्मणे नमो ब्रह्मणे' इति । यज्ञाङ्गराजाभिषेके । ३७।५।५६.

ब्रह्मा होत्रकाश्च कूर्चान् समारोहन्ति महाव्रते । ऐआ. ५।४।१६

ब्रह्मोद्यं = ब्राह्मणाना उन्न संवाद. । अग्निर्गृहपतिरिति हैक आहुः इत्यादिः । अविवाक्ये दशमेऽहनि । २४।६।२२.

ब्राह्मण. आदायी (प्रतिग्रहधर्मा) आपायी (सोमपायी याजनधर्मा) आवसायी (परगृहे भोजनयाचनधर्मा) यथाकामप्रयाप्यः (कोणी हि धुडकावून लावावें, घरातून घालवून द्यावें असा) ।२५।३।२.

ब्राह्मणः क्षत्रियात् भूयान् । ३३।३।८.

ब्राह्मणः देवयजन (यज्ञभूमि) क्षत्रिय याचने । ३४।२।१.

ब्राह्मणः विद्वान् राज्ञो राष्ट्रगोप. पुरोहितः । ४०।२.

ब्राह्मणस्पत्यः प्रगाथ. अग्निष्टोमे, छन्दोमतृतीयेऽहनि पृष्ठ्ये षडहे तृतीये षष्ठे चाहनि 'प्र नूनं ब्रह्मणस्पते' इति । छन्दोमद्वितीयेऽहनि, पृष्ठे षडहे द्वितीये पञ्चमे चाहनि 'उत्तिष्ठ ब्रह्मणस्पते' इति । छन्दोमप्रथमेऽहनि, पृष्ठे षडहे प्रथमे चतुर्थे चाहनि 'प्रैतु ब्रह्मणस्पते' इति । २०।१।९; २०।३।७; ३

ब्राह्मणस्य अग्निप्रणयने गायत्री प्रथमा 'प्र देव देव्या धिया' इति । ५।२।२–३.

ब्राह्मणस्य अनाह्मणत्वेन शिष्टस्तस्य अग्निष्टोमे प्रातःसुत्के अष्टौ सवानि ऋचा अनुष्यानि अब्राह्मणोक्तः = राजसेवाधिकारी । ७।७।६.

ब्राह्मणाः हुतादा आर्त्विज्यात् । ३४।२।११.

ब्राह्मणाना सोमो भक्षः, न क्षत्रियवैश्ययोः । ३५।३।२०.

ब्राह्मणाना सौर्यवैश्वमनु । हुतादः प्रजाः, यद्

माह्मणा । २४।१।१

ब्राम्हणस्पत्य प्रगाथ अग्निष्टोमे, छन्दोमतृतीयेऽहनि, पृष्ठ्ये षडहे तृतीये षष्ठेचाहनि ' प्र नून ब्राम्हणस्पति ' इति । छन्दोमाद्वितीयेऽहनि, पृष्ठ्य षडहे द्वितीये पञ्चमे चाहनि ' उत्तिष्ठ ब्राम्हणस्पते ' इति । छन्दोमतृतीयेऽहनि, पृष्ठ्ये षडहे प्रथमे चतुर्थे चाहनि ' प्रैतु ब्रम्हण स्पति ' इति ।२०।१।९ २०।३।७, इ

ब्राह्मणाच्छंसिन. अग्निष्टोमे प्रात सवने परिधानीया ' स न इन्द्र शिव सखा ' इति, विकृतौ ' इन्द्रेण रोचना दिव ' इति । उभयत्र माध्यदिने ' एवेदिन्द्र वृषणम् ' । उभयत्र तृतीयसवने 'बृहस्पतिर्न परिपातु'। २७।५

ब्राह्मणाच्छंसिन अहरह शस्य उदु ब्रह्माण्यैरत इति वासिष्ठ षड्कृच सपातादुपरिष्टात् ।२९।४।७ १२। अहरह शस्ये सूक्त प्रतिपत् ऋक् ' ब्रह्मणा ते ब्रह्म युजा ' ।२९।६।४। अहीनसूक्त माध्यदिने अस्मा इदु प्र तवसे । चतुर्विंशे, अभिजिति, विषुवति, विश्व जिति, महाव्रते च ।२९।२।५,८। अहीने परिधानीया ' एवेदिन्द्रम् ' ।२९।६।८-१०। अहीने प्रात सवने ' व्यन्तरिक्ष ' इति पर्यासतृच, ' इन्द्रेण रोचना दिव ' इति परिधानीया युक्तिर्नाम । माध्यदिने 'एवेदिन्द्रम् ' इति परिधानीया विमुक्तिर्नाम ।२९।६।२। उक्थ्ये तृतीयसवने आरम्भणीय सूक्त जागत ' प्र मंहिष्ठाय ' ।२८।७।१। ऐन्द्रे शस्त्रे अहर्गणेषु आरम्भणीया ' इन्द्र वा विश्वतस्परि ' । २७।२।१-६। चतुर्थेऽहनि आवापितृच तुभ्येदिमा सवना, प्र वो महे महि वृधे, उप त्वचसे महिने इति विराज । हरीन्वस्य, यदा वज्र, सोचिन्नु वृष्टिर् इति तृच वैमद । पञ्चमेऽहनि शिशिन् वाजाना, निष्वापया, समन्द्र त्वा इति तृच पाङ्क्त । षष्ठेऽनि चिषेषु हि त्वा, वि त्वा ततस्रे, विदुष्टे अस्य वीर्यस्य इति तृच पारुच्छेप ।२९।३।८-९। परिधानीया बृहस्पतिर्न परि पातु ।२८।७।६। प्रात सवने प्रस्थित याज्या इन्द्र त्वा वृषभ वयम् । २८।२।१। माध्यदिने प्रस्थितयाज्या ' एवा पाहि प्रत्नथा ' २८।३।९। तृतीयसवने प्रस्थितयाज्या ' इन्द्रश्च सोम पिबतम् ' । २८।४।८। माध्यदिने द्वे सूक्ते शसनीये इन्द्र पूर्भित्, उदु ब्रम्हाणि । २८।५।६। व्यन्तरिक्षमतिरत् इति सूक्ते तृतीया ' इन्द्रेण रोचना दिव ' इति परिधानीया अहीने प्रात सवने ।२७।४।३-९। षष्ठेऽहनि शिल्पशस्त्रे नाभाकस्तृच ' पूर्वीष्ट इन्द्रोप' । २९।८।१-३। स्तोम विवृद्धौ आवापिक सूक्त ' वने न वा यो न्यधायि ' । २९।३।१०-११

ब्राह्मणाच्छंसिन सत्य सदिय पशुभाग सत्रे । ३।१।२,

ब्राह्मणाच्छसिशस्त्र अग्निष्टोमे प्रात सवने । ऐन्द्रम् । प्रतिपत् तृच ' आ याहि सुषुमा ' इति । अनुरूप तृच ' आ नो याहि ' । सूक्त त्रयोदशर्चं ' आ याहि सुषुमा' ( इत्यनुवर्तते ) । सूक्त नवर्चं ' इन्द्र त्वा वृषभ ' इति । सूक्त तृच उद्घेदभि श्रुता इति, तत्र तृतीया परिधानीया । प्रयोगे । ऐआ ५।१।५ सायण ।

ब्राह्मणाच्छसिशस्त्र अग्निष्टोमे माध्यदिने । प्रतिपत् प्रगाथ ' त वो दस्ममृतीषह ' इति, अनुरूप प्रगाथ तत्वा यामि सुवीर्यम्, प्रगाथ ऐन्द्र उदु त्ये मधुमत्तमा, सूक्त ऐन्द्र इन्द्र पूर्भिदातिरत् एकादशर्चम्, सूक्त ऐन्द्र 'उदु ब्रह्माण्यैरत' तत्र षष्ठी परिधानीया । प्रयोगे ।

ब्राह्मणाच्छसिशस्त्र चतुर्विंशेऽहनि महाव्रते च प्रात सवने ' सुरूपकृत्नु ' इति । ऐआ ५।१।५

ब्राह्मणाच्छसिशस्त्र महाव्रते प्रात सवने । प्रतिपत् तृच त्रिकद्रुकेषु महिषो, अनुरूप तृच एन्द्र याह्युप न इत्येका, इन्द्राय हि द्यौरसुरो इति द्वितीया, प्रोष्वस्मै पुरोरथ इति तृतीया । इद ब्राह्मणान्तरानुसारेण । ऐआ. ५।१।७.

ब्राह्मणाच्छसिशस्त्रे उक्थ्ये क्रतौ ' उदप्रुतो न वयो ' इति द्वादशर्च सूक्त, अच्छा इन्द्र मतय इत्येकादशर्चं सूक्त च शसनीयम् । १५।५।२.

ब्राह्मणाच्छसिशिल्प षष्ठेऽहनि । सुकीर्ति शसति ' अप प्राच ' । वृषाकपिं शसति पाङ्क्त ' वि हि सोतो रसृक्षत ' न्यूङ्खयति । वृषाकपिसूक्त पञ्च शस्यम् । ३०।३।१-५ । कुन्तापसूक्त त्रिंशदृच, तत्र नारा शसीस्तिस्र प्रगाह ( पादे पादेऽवसाय ) शसति, रैभी-

स्तिस्रः प्रगाहं शंसति, पारिक्षितीश्चतस्रः प्रगाहं शंसति, कारव्याश्चतस्रः प्रगाहं शंसति । नाराशंस्यादिषु न्यूङ्खो न कर्तव्यः, निनर्दस्तु कर्तव्यः । दिशां क्लृप्तीः पञ्च अर्धर्चशः शंसति, जनकल्पाः षड् अर्धर्चशः शंसति, अत्रोभयत्र न्यूङ्खो निनर्दश्च न कर्तव्यौ । इन्द्रगाथाः पञ्च अर्धर्चशः शंसति, न्यूङ्खनिनर्दौ न स्त एव । ३०।६। ऐतशप्रलापं सप्ततिसंख्याकपदसमूहात्मकं पदावग्राहं शंसति, तस्योत्तमेन पदेन प्रणौति। प्रवह्लिकाः षड् अर्धर्चशः शंसति । आजिज्ञासेन्याः चतस्र ऋचः अर्धर्चशः शंसति । प्रतिराधं पदत्रयात्मकं मन्त्रं शंसति । अतिवादं मन्त्रं अर्धर्चशः शंसति । ३०।७। देवनीथं सप्तदशपदात्मकं पदावग्राहं शंसति, तस्योत्तमेन पदेन प्रणौति । ३०।८–९ । भूतेच्छदास्तिस्रः अर्धर्चशः शंसति । आहनस्याः दश शंसति, ताः न्यूङ्खयति । दधिक्राव्णो अकारिषमिति दाधिक्रीं शंसति । सुतासो मधुमत्तमाः इति पावमानीस्तिस्रः शंसति । अथ द्रप्सो अंशुमती इति ऐन्द्राबार्हस्पत्यं तृचं शंसति । ३०।१०.

ब्राह्मणाच्छंसी उक्थ्ये तृतीयसवने प्रमंहिष्ठाय इति ऐन्द्राबार्हस्पत्यं शंसति । तस्य स्तोत्रियानुरूपौ ऐन्द्रौ 'वयमु त्वा, यो न इदं' इति । २८।६।१०.

ब्राह्मणाच्छंसी महाव्रते प्रातःसवने स्वशस्त्रान्ते ईङ्खयन्तीरपस्युवः इति पञ्चर्चं सूक्तमावपेत । माध्यंदिने 'आ नो विश्वासु हव्य' इति स्वशस्त्रान्ते 'तीव्रस्याभिवयसः' इति पञ्चर्चं सूक्तमावपेत । ऐआ. ५।१।६.

भक्षः आदित्यग्रहस्य नास्ति । १३।५।३.

भक्षः उक्थ्यपात्रादीनां, आहरति अध्वर्युरुक्थ्यपात्रमतिग्राह्यान् चमसांश्च, भक्षं प्रतिख्याय (ज्ञात्वा) होता प्राङ् प्रेङ्खादवरोहति, अपेतं प्रेङ्खं प्रत्यञ्चमवबध्नन्ति यथा शंसितारं भक्षयिष्यन्तं नोपहनिष्यति, प्रेङ्खस्यायतनमासीनो होता भक्षयति, अथ तदुक्थ्यपात्रं होता उपस्थेन (अनुज्ञापूर्वकेण, जपेन भक्षयति 'वाग्देवी सोमस्य तृप्यतु । सोमो मे राजाऽसुः प्राणाय यच्छतु । स मे प्राणः सर्वमायुर्ददा भवत्' इति । ऐआ. २।१३।१–१३.

भक्षः द्विदेवत्यग्रहाणां, ऐन्द्रवायवस्य मैत्रावरुणस्य पुरस्तात् प्रत्यञ्चं, आश्विनस्य तु सर्वतः। परिहारं (स्वशिरः प्रदक्षिणीकृत्य)। एष वसुः पुरूवसुरिह वसुः इत्यादिमन्त्रेण ऐन्द्रवायवं भक्षयति, एष वसुर्विदद्वसुः इत्यादिना मैत्रावरुणं भक्षयति, एष वसुः संयद्वसुः इत्यादिना आश्विनं भक्षयति ।९।३।३-८.

भक्षः पात्नीवतग्रहस्य, आग्नीध्रः नेष्टुरुपस्थमासीनो भक्षयति । २६।३।१०–११.

भक्षः प्रवर्ग्ये, पावकशोचे तव हि क्षयं परि इति भक्षमाकाङ्क्षते । 'हुतं हविर्मधु हवि० मा मा हिंसी' इति घर्मस्य भक्षयति । ४।५।९–१०.

भक्षः सावित्रग्रहस्य नास्ति । १३।५।४.

भरतः दौःषन्तिः ऐन्द्रेण महाभिषेकेण समन्तं पृथिवीं जयन् परीयाय अश्वेन च मेध्येनेजे । ३९।९।१–७.

भरतद्वादशाहः । तस्य अहःक्लृप्तिः । अतिरात्रः, अग्निष्टोमः, अष्टौ उक्थ्याः, अग्निष्टोमः, अतिरात्रः इति । १९।१।१–६.

भरद्वाजः मनुलर्षिः प्राणदृष्टया उपास्यः । ऐआ. १।९।१०.

भरद्वाजप्रगाहः । भरद्वाजेन संपादितः महाव्रते निष्केवल्यस्य उत्तरः पक्षः, बार्हतः, सप्तदशस्तोमः द्विशतम् (१०२)। ऐआ. ५।८।७.

भरद्वाजो वै ऋषीणामनूचानतमः दीर्घजीवितमः तपस्वितम आस । ऐआ. १।६।८.

भर्गः नाम राजा, तस्य गोत्रापत्यं त्रिशिरस्य पुत्रः सुत्या नाम । तस्य शत्रुभूताः पञ्च राजानः परिमरमन्त्रपाठात् परिमम्रुः । ४०।५।१८.

भागाधिकारिणे भागादाने अदातुर्नाशः । 'यो वै भागिनं भागान्नुदते चयते (नाशयति) वैनं, स यदि वैनं न चयते, अथ पुत्रमथ पौत्रं, चयते त्वेवैनम्। ६।७।४.

भिक्षे प्रायश्चित्तं 'रुक्' शब्दे द्र० । १२।४।३.

भूतानां मैथुनं (मागधपुंश्चल्योः) उत्तरस्या वेदिश्रोण्या परिश्रिते । महाव्रते । ऐआ. ५।५।१३.

भूतेच्छदः नाम मन्त्राः ब्राह्मणाच्छंसिशस्त्रे पठ्य-

इति । त्वामिन्द्र शर्मरिणा इति तिस्रः अनुष्टुभः अर्धर्चशः शंसतव्याः । २०।१०।१-३.

**भूमिः** विश्वकर्माणं भौवनं नाम राजानमाह । 'न मा मर्त्यः कश्चन दातुमर्हति विश्वकर्मन् भौवन मा दिदासिथ । निमङ्क्ष्येऽहं सलिलस्य मध्ये मोघस्त एष कश्यपायास संगरः' इति ( कश्यपस्य भूमिप्रतिग्रहविषयः संगरः मोघः आस ) । ३९।७।१०.

**भूमिदुन्दुभेः** आहननं महाव्रते । भूमिदुन्दुभिर्नाम अपरेण आग्नीध्रीय भूमिन्दुदुभिं अवट (गर्ते) खनन्ति । अर्धमन्तर्वेदि अर्धं बहिर्वेदि । तमार्द्रेण चर्मणा उत्तरलोम्ना अभिवितत्य ( प्रसार्य ) शङ्कुभि परिनिहत्य अत्रैतत् पुच्छकाण्डं ( पशोः ) आहननार्थं निदधाति । पुच्छकाण्डेन भूमिदुन्दुभिमाघ्नन्ति ( आपस्तम्बः ) । ऐआ. ५।५।१३ सायणः ।

**भ्रंशः** नाम साकल्येन द्रव्यपतनम् । स्खलनं तु बिन्दुपतनम् । तत्र प्रायश्चित्तं, अग्निहोत्रहविः आहवनीयं प्रति नयनकाले यदि स्खलते भ्रंभते वा तदा स तत्रैवोपविशेत् । अन्यः पुरुषश्च स्थालीगतं अग्निहोत्रद्रव्यशेष तत्समीपे आहरेत् । स च पुनश्चतुरुन्नीय जुहुयात् इति । ३२।४।६.

**भ्रातरः** रिक्थविभागं पितरि सत्यपि कुर्वन्ति । 'नाभानेदिष्ठं वै मानवं ब्रह्मचर्यं वसन्त भ्रातरो निरभजन्' । २२।९।२.

**मञ्जिष्ठा**=वर्णविशेषद्रव्यं रक्तम् । ऐआ. ३।१।५।७.

**मथितस्याग्नेः** अग्नौ प्रहरणम् । तदा च ' प्र देव देववीतये ' इति मन्त्र पठेत् । ३।५।२०-२३.

**मद्वान्** प्रतिगरः ' मदामो दैवं इति आग्निमारुतशस्त्रे अनुपानीयासु ।१३।१४।१-२.

**मधु** ऐन्द्रमहाभिषेके संभारः चमसे पात्र्यां वा अभ्यानेयः । ३९।३।१ । यशाङ्गराजाभिषेके च ।३७।१।३.

**मनोतासूक्तं** ' त्वं ह्यग्ने प्रथमो मनोता ' इति पशुप्रधानावदानकालीन अनुवचनीयम् । ६।१०।१-४

**मन्त्राः** अभिषेके यशाङ्गे । इमाः आपः शिवतमाः, याभिरिन्द्रमभ्यषिञ्चत्, महाना त्वा महीना, देवस्य त्वा सवितुः० यशसेन्नाद्याय भूर्भुवः स्वः इति । व्याहृतयो न सन्तीति के चित्, तत्र । ३७।३।१।१०.

**मन्थनमग्नेः** आतिथ्यायाम् । प्रैषः अग्नये मथ्यमानायानुब्रूहि इति । अग्निमथनीया ऋचः. अभि त्वा देव सवितः इति सावित्री, मही द्यौः पृथिवी इति द्यावापृथिवीया, त्वामग्ने पुष्करादधि इति तृचः आग्नेयो गायत्रः ( अभरजनने चिरजनने वा निमित्ते, अग्ने हंसि न्यत्रिणं इत्यादयः पञ्च राक्षोघ्न्यः ) उत ब्रुवन्तु जन्तवः इति जाताय, आयं हस्तेन खादिनं, प्र देवं देववीतये इति प्रह्रियमाणाय, आ जातं जातवेदसि, अग्निनाऽग्निः समिध्यते, त्वं ह्यग्ने अग्निना, तं मर्जयन्त सुक्रतुं, यज्ञेन यज्ञ । इति त्रयोदश । त्रिः प्रथमामन्वाह त्रिरुत्तमाम् । ३।४।६. ३।५।१-४४.

**मन्थावलानां** सृष्टिः सोमानयनकाले गायत्र्यां यो बाणः सोमपालेन प्रक्षिप्तः तस्य पर्णेभ्यो जाताः (ये जीवविशेषाः वृक्षशाखासु अधोमुखा अवलम्बन्ते=सायणः । सर्पटोळ.) १३।२।१३.

**मरणविषये** आहिताग्नेः, प्रायश्चित्तानि । आहिताग्निरुपवसथे म्रियेत, नैनं याजयेत् ( उत्तरो यागो न कर्तव्यः ) । आहिताग्निः अधिश्रिते अग्निहोत्रे सानाय्ये वा हविःषु वा म्रियेत, तदा यजमानदहनदेशे एव एतानि हवींषि पर्यादध्यात्, यथा सर्वाणि संदह्येरन् । ३२।१।१-२ । आहिताग्निः आसन्नेषु हविःषु म्रियेत, तदा याम्य एव तानि देवताभ्यां हवींषि गृहीतानि भवन्ति तान्य. स्वाहा इत्येवैतानि आहवनीये सर्वहुन्ति जुहुयात् । २२।१।३। आहिताग्निः प्रवसन् म्रियेत, तदा अभिशान्यवत्सायाः पयसा, अपि वा यत एव कुतश्च पयसा अग्निहोत्रं जुहुयात्, अथवा अग्नीन् अजस्रान् अजुह्वतः इन्धीरन् आशरीराणामाहर्तोः । यदि शरीराणि न विद्येरन् पर्णशरः । ३२।१।४-७.

**मरणसूचकानि अरिष्टानि** । प्रत्यक्षाणि = ( १ ) चन्द्रमा इवादित्यो दृश्यते न रश्मयः प्रादुर्भवन्ति, (२) लोहिनी द्यौर्भवति यथा मञ्जिष्ठा, ( ३ ) व्यस्तः वायुः ( निवृत्तो भवति न संकोचयितु शक्यते ), (४) काककुलायगन्धि-अस्य शिरो वायति ( दुर्गंधं प्रसारयति ), ( ५ ) यत्र छिद्र इवादित्यो दृश्यते रथनाभिरिवाभि-

